

SAPTHAGIRI (SANSKRIT)
SPIRITUAL ILLUSTRATED MONTHLY
Volume:9, Issue: 10
January-2023, Price Rs.20/-
No. of pages-24

तिरुमलतिरुपतिदेवस्थानानि

# सप्तगिरिः

आध्यात्मिकसचित्रमासपत्रिका

जनवरि २०२३
रू. २०/-

विश्वेशं विश्वकर्तारं महातेजः प्रदीपनम्।
महापापहरं देवं तं सूर्यं प्रणमाम्यहम्॥

## रथ सप्तमि

(२८.०१.२०२३)

# तिरुमलतिरुपतिदेवस्थानानि

२०.११.२०२२ तः २९.११.२०२२ पर्यन्तं श्री तिरुचानूरु पद्मावती देव्याः कार्तिक ब्रह्मोत्सवाः अयोजिताः। अस्मिन् कार्यक्रमे आन्ध्रप्रदेश् उप मुख्यमन्त्रिवर्यः श्री के.नारायणस्वामी महोदयः आन्ध्रप्रदेश् राज्य पक्षतः देव्याः पीताम्बराः समर्पितवन्तः।

नवदिनेषु आयोजित एषु उत्सवेषु ति.ति.दे. अध्यक्षः श्री वै.वि.सुब्बारेड्डि दम्पत्यौ भागं गृहीतवन्तौ। ताभ्यां सह ति.ति.दे. कार्यनिर्वहणाधिकारिणः श्री ए.वि.धर्मा रेड्डि वर्यः,ऐ.डि.ई.एस्, ति.ति.दे. संयुक्त कार्यनिर्वहणाधिकारिणौ श्री ऐ.वीरब्रह्मम्, ऐ.ए.एस्., श्रीमति सदा भार्गवी, ऐ.ऐ.एस्, अन्ये प्रमुखाः ति.ति.दे. उन्नताधिकारिणः भागं स्वीकृतवन्तः।




















# गीतामृतम्

सञ्जय उवच

तं तथा कृपयाविष्टमश्रुपूर्णाकुलेक्षणम्।
विषीदन्तमिदं वाक्यमुवाच मधुसूदनः।।

(भगवद्गीता ०२ -१)

भावः - सञ्जयः धृतराष्ट्रं प्रति एवमुवाच। अश्रुपूर्ण अर्जुनं दृष्ट्वा दयासागरः मधुसूदनान्वितः श्रीकृष्णः एवम् उवाच।

# सङ्कीर्तनम्



अञ्जलिरञ्जलिरयं ते
किं जनयसि मे खेदं वचनैः ।।अञ्जलि।।
मां किं भजसे मया किं ते
त्वं को वा मे तव काहं
किं कार्यमितो गेहं मम ते
शङ्कां विना किं समागतोसि ।।अञ्जलि।।
ननु विनयोक्तेर्न योग्याहं
पुनः पुनस्त्वं पूज्योऽसि
दिनदिनकलहनिधिना ते किं
मनसिजजनक रमामरण ।।अञ्जलि।।
दैवं बलवत्तरं भुवने
नैव रोचते सम्यक् मया
एवमेव भवदिष्टं कुरु कुरु
श्री वेङ्कटाद्रिश्रीनिवास ।।अञ्जलि।।

(अन्नमाचार्यसङ्कीर्तनम्)

# पौष्यलक्ष्मी वैभवम्



सम्पादकीयम्

परिवर्तनं संसारस्य प्रथमनियमः। अनन्त काल प्रवाहे तरन्तः वयं महत्त्वपूर्णान् परिणामान् संस्मरामः।तादृशेषु परिणामेषु सङ्क्रमणम् अन्यतमम्। कालनियामकपुरुषः सूर्यनारायणरूपेण अस्मान् सर्वान् प्रतिदिनम् अनुग्रहीतुं प्राच्यां दिशि उदेति। स च नवग्रह मण्डलाधीशः, खेचरचकवर्ती च। तादृशेषु खेचरेषु द्वादश राशयः अन्यतमः। भगवान् सूर्यः प्रत्येकस्मिन्नपि मासे एकैकं राशिम् आधारीकृत्य सञ्चरतीति वैदिकगणितज्ञानाम् अभिमतिः। तमेव परिवर्तन कालं सङ्क्रमणम् इत्यपि आहूयन्ति। सम्यक् गमनं सङ्क्रमणम् इति। एतेषु द्वादश सङ्क्रमणेषु अत्यन्त मुख्यतमौ द्वावेव। एकम् उत्तरायणं, द्वितीयं दक्षिणायन पर्वकालमिति। वैदिकमतानुरीत्या उत्तरायणं देवानां कृते दिनमिति दक्षिणायनापर्वकालं रात्रिरिति कथितः। भगवान् सूर्यः धनुः राशिः तः मकरराशिप्रवेश समयमेव मकरसङ्क्रमणम् अथवा उत्तरायण पुण्यकालमिति कथयन्ति। अस्मिन् दिने आभारते तत्रत्य नियमानुरीत्या मकरसङ्क्रमणम् आचरन्ति।

अस्मिन् दिने प्रातः काले उत्थाय समीपस्थ नदीम् अथवा तटाकं प्रति गत्वा स्नात्वा सन्ध्यावन्दनं, सूर्यनमस्कारादीन् कृत्वा विगत पितॄन् उद्दिश्य जलतर्पणादिकं कुर्वन्ति। ततः परं कूष्माण्ड दानादिकमपि कुर्वन्ति च। भारतदेशस्य अत्यन्त आवश्यकी भूता प्रजनेषु अन्यतमः कर्षकाः (कृषिकाः)। ते तस्मिन् दिने स्वीयक्षेत्रात् आगतं सस्यं गृहमानीय पौष्यलक्ष्मीरूपेण भावयित्वा सम्पूजयति। अयं मकरसङ्क्रान्तिमहोत्सवः महती वैभवेन दाक्षिणात्ये आचरन्ति औत्तरोपरि। तत्रापि आन्ध्रा, तेलङ्गाणा, तमिळनाडु प्रान्ते आचरन्ति। अयं उत्सवः त्रिदिनात्मकोत्सवः। प्रथमं दिनं भोगि इति, द्वितीयं दिनं सङ्क्रान्तिरिति, त्रुतीयं दिनं कनुम इत्यपि आचरन्ति। भोगी दिने गृहे सर्वेरपि तैलाभ्यंगनं कृत्वा नूतन वस्त्राणि धृत्वा गृहस्य पुरतः गोमयेन संलिप्य रङ्गवल्यः रचयित्वा तन्मध्ये गोमयेन गौरीरूपं निर्माय, तस्मिन् काले लभ्यमान कूष्माण्डपुष्पैः अलङ्कृत्य पूजयन्ति। सायं समये बालान् उपाविश्य स्वीय आरोग्य रक्षणाय सकलविध दृष्टिदोष परिहारार्थं बदरीफल मिश्रित विविध फलैः अभिषिञ्चन्ति। सर्वेभ्यः पौष्यलक्ष्म्याः अनुग्रहेण इष्टकाम्यान् प्राप्नुवन्तु इति प्रार्थयामहे।

*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*



तिरुमल-तिरुपतिदेवस्थानानां सचित्रमासपत्रिका
आध्यत्मिकसचित्रमासपत्रिका

# जनवरि २०२३

सम्पुटिः-०९ सञ्चिका-१०

श्रीशुभकृत्संवत्सरस्य पुष्यशुक्लदशमी तः
श्रीशुभकृत्संवत्सरस्य माघशुक्लदशमीपर्यन्तम् - १९४४



मुखचित्रम् – रथ सप्तमी
अन्तिमरक्षापुटः – वसन्त पञ्चमी

गौरवसम्पादकः:-
श्री ए.वी.धर्मारेड्डि I.D.E.S.,
कार्यनिर्वहणाधिकारी (F.A.C.), ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः
डा॥ के.राधारमणः, M.A., M.Phil., Ph.D.,

सम्पादकः - डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः - श्री पि.रामराजु, M.A.,
प्रत्येकाधिकारी,
ति.ति.दे.मुद्रणालयः,
तिरुपतिः।

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः, छायाचित्रग्राहकः,
ति.ति.दे.
श्री बि.वेङ्कटरमणः, सहायक-छायाचित्रग्राहकः, ति.ति.दे.

**सूचना**

मुद्रितलेखानां विचाराः लेखकानामेव।
एतद्विषये अस्माकं दायित्वं नास्ति।
*— प्रधानसम्पादकः*

**सङ्केतः**

प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९,
२२६४३६०
सूचनानाम्, आक्षेपाणां च कृते
सम्पर्कं कुर्वन्तु -
sapthagiri.helpdesk@tirumala.org

एका पत्रिका : रू.२०/-
वार्षिकग्राहकत्वम् रू.२४०/-
आजीविक ग्राहकत्वम् रू.२४००/-

# वैकुण्ठ एकादशी परमपवित्रं दिनम्

- श्री के.जि.महेश्
चरवाणी - ९४८०९०२१३१

चान्द्रमान पुष्यमासे शुक्लपक्षे एकादशी तिथिः परमपवित्रेति सर्वेषां सनातनधर्मीयाणां समेषाम् आस्तिकजनानां विश्वासः। एतस्मिन् दिने विशेषरूपेण कलियुगप्रत्यक्षदैवस्य सप्तगिरिनाथस्य श्रीवेङ्कटेशस्य मन्दिरे अशेषभक्तजनाः सम्मर्दयन्ति देवदर्शनकांक्षिणः। अस्मिन् दिवसे देवालये निर्मित वैकुण्ठद्वारेण प्रविश्य भगवतः दर्शनं ये प्राप्नुवन्ति ते कलिमलहरणेन मोक्षगामिनः भविष्यन्ति इति श्रूयते पुराणेषु।

वैकुण्ठ एकादश्यां वैकुण्ठस्य द्वारोद्घाटनं भवति अतः एतात्द्दिने वेङ्कटेशस्य दर्शनं प्राप्नुवन्ति ते जरामरणजात् भवबन्धनात् मुक्ताः भवन्ति। अस्मिन् दिने भगवत भक्ताः निराहारं पालयन्तं प्रतिक्षणमपि भगवन्नाम सङ्कीर्तयन्तः उपवासं समाचरन्ति। ये केचित् वृद्धाः, अशक्ताः ते तु फलानि स्वीकृत्यं हरिं स्मरन्तः उपवासव्रतम् आचरन्ति।

यदा सूर्यः उत्तरायणगः स्वपथः परिवर्तते, धनुर्मासस्य शुद्ध - एकादश्यां तिथौ ‘वैकुण्ठ एकादशीं पर्वः समाचर्यते। सूर्यः धनुराशिं प्रविश्य मकरसङ्क्रमणं यावत् सञ्चरति तन्मार्गमध्ये एषा वैकुण्ठ-एकादशी समायाति। ये भक्ताः अस्यामेकादश्याम् उपवासव्रतम् आचरन्ति तेतु त्रयोविंशतिः एकादशीनां व्रतानां फलं प्राप्नुवन्ति।

**वैकुण्ठ एकादशीं** अत्र पदद्वयम् अस्ति। वैकुण्ठः नाम विष्णुलोकः। विष्णोः वैकुण्ठ इत्यपि नामास्ति। महाभारतस्य शान्तिपर्वणि श्रूयते यत् एकस्मिन् मन्वन्तरे श्रीमहाविष्णु वैकुण्ठ इति नाम्ना स्त्रीरूपमवतरत्। मासस्य दशमी तिथेरनन्तरम् आयाति एकादशी तिथिः। एषा श्रद्धधनैः वैष्णवैः व्रतरूपेण निराहारम् उपावसपुरस्सरं सम्पाद्यते। दशम्याम् एक भुक्तः सन् एकादश्यां निराहारं वसन् श्रीहरिं मनसा ध्यायन् द्वादश्यां प्रातरुत्थाय नित्यकर्मणि समाप्य एकादशीव्रतम् उपसंहरेत् इति व्रताचरणविधिः। भगवत्समीपे एव वासः उपवासः कथ्यते।

भक्तः शुचिर्भूत्वा भोगेषु निरासक्तः निरन्तरं भगवन्नाम स्मरन्, ध्यायन् वसेत्। अस्मिन् दिने भगवान् नारायणः स्वयं वैकुण्ठात् अवतीर्य भक्तेभ्यः दर्शनभाग्यं प्रयच्छति। पुण्यप्रदमिदं दिनम्। मनुष्याणां पापानि हरति, सत्सङ्कल्पेन समारब्धेभ्यः कार्येभ्य - सफलतां च वितरति श्रीमहाविष्णुः। उत्तरद्वारेण भगवत् दर्शनं ये प्राप्नुवन्ति ते मुक्ता भवन्ति।

एकादशी व्रताचरणेन देहदृढतां मानसिकस्वास्थ्यं च प्राप्यते। शरीरमाद्यं खलु





धर्मसाधनम् इति महाकवेः कालिदासस्य वचनम्। धर्मप्रचोदनाय शरीरनियन्त्रणाय इन्द्रियाणि च निगृहीतुम् एकादशीव्रत महदुपकरोति। एकादश - इन्द्रियाणि नियन्त्रयति एकादशी व्रतम्। एकादशी - व्रतसमानम् आचरणं न विद्यते। नारदीय पुराणे एकादशी व्रताचरणं श्रेष्ठतरमिति सर्वेभ्यः अनायासेन आचरितुं योग्यमिति महर्षिणा व्यासेन निबोधितम्।

## वैकुण्ठ एकादशी कथा

भागवतोत्तमः नन्दगोपः श्रीकृष्णस्य सान्निध्ये एकादशी उपवासं समाचरति स्म। एकदा एकादशी व्रतं समाचर्य तदनन्तरदिने द्वादश्याः उपरि त्रयोदशी समागतासीत्। अतः उषोदयात् पूर्वं नदीम् अवतीर्णः।सः राक्षसानां सञ्चारकालः आसीत्। देवसेवकः राक्षसः नन्दगोपं वरुणस्य समीपम् अनयत्। गोपालकुलसञ्जाताः सर्वे सव्याकुलाः नन्दगोपः स्नानाय गतः न पुनरायातः' इति विषयं बलरामकृष्णाभ्यां निवेदयन्। सर्वज्ञः श्रीकृष्णः अभयं दत्वा पितुः, आनयनाय प्रस्थितः। वरुणलोकं समायान्तं श्रीकृष्णं स्वयं वरुणदेवः अभिवाद्य तत्सेवकेन कृतः अपराधः क्षन्तव्यः इति प्रार्थयामास। श्रीकृष्णः वरुणम् आशीर्वाद्य पित्रा सह गोकुलं समागच्छत्।

वरुणलोकस्य वैभवं तत्र श्रीकृष्णाय प्रदत्त भव्यस्वागतं तद्रमणीयतां तल्लोकवासिनां कृष्णभक्तिं गोपालकेभ्यः नन्दगोप अवर्णयत्। एतद्विज्ञाय गोपालकुलनाः कृष्णं परमार्थतः द्रष्टुम् ऐच्छन्।

सर्वेषां गोपालकानां मनोवाञ्छां विज्ञाय श्रीकृष्णः तान् यमुना नद्यां ब्रह्मकुण्डे स्नात्वा आगन्तुम् अकथयत्। एवं प्रकारेण यदा ते सर्वे स्नात्वा बहिरागताः तदा वैकुण्ठस्य दर्शनं प्राप्तवन्तः धन्यास्ते श्रीकृष्णं भूयो भूयः संस्तुवन्। पवित्रं दिनमिदं तद्दिनात् वैकुण्ठ एकादशी इति लोके सम्प्रसिद्धम् अभवत्।

# रथ सप्तमी



- श्री आर्.अनन्तकृष्णशर्मा
चरवाणी - ८९७८५८७७५१

धरित्र्यां सकलजीवराशयः सुभिक्षेण आवासमानास्सन्ति, तस्य कारणं भगवान् सूर्यदेवः एव। एतदर्थं भगवन्तं भास्करं प्रत्यक्षदेवः इति कथयन्ति। किन्तु साम्प्रदायानुरीत्या सूर्याराधनाय अतीव वैशिष्ठ्यं वर्तते परममुख्येण भक्ताः सूर्यजयन्ति दिने एनं वैभवेन पूजयन्ति। माघमासे शुक्ल पक्षे सप्तम्यां तिथे एतत् पर्वदिनमागच्छति। तेनेव रथसप्तमीति कथ्यन्ति। सूर्यः सप्ताश्व रथम् आरुह्य दक्षिणायनं समापय पूर्वोत्तर दिशां प्रति पयनं करोति इति भक्तानां विश्वासः। माघ सप्तमी आरभ्य आगामिनी षण्मास कालः उत्तरायणपर्वकालेन परिगणयन्ति। भगवान् सूर्यस्य सप्ताश्वाः सप्तवार प्रतीकाः। केचन सप्ताश्वान् वेदप्रतिपाद्य मुख्य सप्तछन्दांशि रूपेण परिगणयन्ति। ते एव गायत्री, त्रिष्टुप्, जगति, अनुष्टुप्, बृहति, उष्णिक्,पङ्क्ति इति। सूर्यः वैदिक ज्योतिष्यानुसारं मेषादारभ्य मीन राशि पर्यन्तं द्वादश राशौ सञ्चरन्ति। द्वादश रासौ सञ्चरितुं सूर्यरथस्य एक वत्सरः काल अनुमीयते। सूर्यजयन्ती नाम सूर्यस्य जन्मदिवसः न, परं रथमारुह्य सूर्यः

## एकस्मिन् राशौ त्रिंशत् दिनानि

विश्वम् एकं वृत्तरूपेण भावयामः चेत् तस्य षष्ट्योवेत्तर त्रिशत (360) सङ्ख्याक आवरणाः सन्ति इति गणितज्ञाः वदन्ति। सूर्यः एकस्मिन् दिने एकम् आवरणं सञ्चरित्वा षष्ट्योत्तर त्रिशत दिनेषु अमुं वृत्तं पूरयति। इत्युक्ते एकसंवत्सरात्मक कालः। एतदर्थं दैवज्ञाः इदं सृष्टि चक्रं द्वादशराशि रूपेण विभज्य एकैकं राशिं त्रिंशत् आवरणैः विभाजिताः। सूर्यः एकैकस्मिन् राशौ सञ्चार्यमण कालं एकमासेन परिगणिताः।

वयं दृश्यमान सूर्यः एकैव इति वयं भावयाम परं विश्वे इतोऽपि एकादशात्मक सूर्याः सन्ति इति वैज्ञानिकाः ज्ञातवन्तः। परन्तु अस्मदीय भारतीयाः वेदकाले एव एतान् द्वादशादित्यान् आविष्कृतवन्तः। ते एव मित्र, रविः, सूर्यः, भगः, पूषन्, हिरण्यगर्भः मरीचिः, आदित्यः, सविता, अर्कः, भास्करादयाः। एते एव द्वादशमासानाम् अधिदेवता एतत् कारणेन द्वादश राशयः समुपन्नाः।



सूर्यः एकैकस्मिन् मासे एकैक राशौ सञ्चरति।

माघमासे भगवान् सूर्यः अर्कनाम्ना सञ्चरति। माघ शब्दस्य पापरहितः इत्यर्थः। न अघः माघः इति अत्यन्त पुण्यप्रदायक मासः माघमासः वस्तुतः उत्तरायणं मकरसङ्क्रमणेन आरभ्यमाणापि रथसप्तम्यात् एव उत्तरायण स्फूर्तिः प्रस्फुटेन गोचरः वर्तते। दक्षिणायनात् विमुक्तः भास्करः अस्मात् दिनात् एव उत्तर दिशां प्रति गमयति। तदर्थमेव रथसप्तमीं सूर्यग्रहणतौल्येन भाव्य, देव, पितृ, ऋषि तर्पणादयः करणीयः इति नियमं निर्मीतवन्तः।

**सर्वेषां जीवराशीनाम् आत्मेव सूर्यः**

सौरकुटुम्बे समस्त प्रणीनां सूर्यः एव आत्मा। तदर्थं ये सूर्योपासनं कुर्वन्ति तेषां ऋण, रोग, शतृ बाधाः नश्यन्ति। अस्माकं वैदिक मन्त्रपुष्पेषु एकदा कथ्यमान **योपां पुष्पं वेदा, पुष्पवान् प्रजावान् पशुमान् भवति** इत्येते मन्त्राः सूर्योपासन सम्बन्धिनः एव। यः सूर्याराधनं करोति सः पुष्पवान् प्रजावन्, पशुमान् भवति इत्यर्थः।

आधुनिक वैज्ञानिकरीत्या अस्माकं शरीरस्य कृते अत्यन्त आवश्यकं **विटमिन् डि** अपि सहजसिद्धतया सूर्यकिरण प्रभावेण लभते। अवश्यं प्रतिदिनं अस्माकं शरीरस्योपरि सूर्यकिरण प्रसाराः भवितव्या। एतदर्थम् अस्माकं वैदिकवाङ्मयं सन्ध्यावन्दन, अर्घ्य प्रदान, सूर्यनमस्कारादयः प्रक्रियाः परिवेषिताः।

भगवान् सूर्यनारायणस्य जन्मदिनोत्सवं कलियुग वैकुण्ठमिति विराजमान तिरुमल क्षेत्रेपि अत्यन्त वैभवेन आयोजयन्ति। तत् दिनं लघु वार्षिक ब्रह्मोत्सवः इत्यपि कथयन्ति। वेङ्कटेश्वरस्य उत्सवमूर्तिः मलयप्पस्वामिनः उभयदेवेर्याः साकं सप्तषु वाहनेषु आरुह्य अशेष भक्तजनान् अनुगृह्णाति। सूर्योदयात् आरभ्य आरात्रि पर्यन्तं विविधेषु वाहनेषु विविधैः अलङ्कारैः अलङ्कृत्य स्वामिनं चतुर्षु माडवीथिषु राजोपचाररीत्या उत्सवं चालयन्ति। सूर्यप्रभावाहनम् हनुमद्वाहनं, कल्पवृक्षवाहनं, सर्वभूपालवाहनं, गरुडवाहनं, लघुशेषवाहनं, चन्द्रप्रभवाहनानि च इत्यादिषु वाहनेषु भगवन्तं वेङ्कटेशं देवेर्यासाकम् उपाविश्य उत्सवं चालयन्ति। अन्यद् एकं वैशिष्ठ्यं किं नाम तस्मिन् दिने मध्याह्ने अपराह्ण काले अभिजित् नक्षत्र समये चक्रस्नानमपि च कुर्वन्ति।

सर्वैरपि आबालगोपाल पर्यन्तं प्रत्यक्ष देवं सूर्यनारायणं समर्च आयुरारोग्यऐश्वर्यान् प्राप्नुवन्तु इति भगवन्तं पद्मावतीजानीं श्री वेङ्कटेशं सहस्रशः संस्मरामः।



# नववर्षगीतम्

**रागमालिका : आदि तालः**

**पल्लवी (नाटः रागः)**
**एहि भो नववर्ष!**
**एहि एहि, भो नववर्ष!**
**स्वागतं भो नववर्ष!**
**सुस्वागतं भो नववर्ष!**



**चरणम् १ (वसन्तः रागः)**
**एत्य जनान् उद्धारय।**
**अत्रेत्य जनान् उद्धारय।**
**प्रीत्या अस्मान् पालय।**
**सम्प्रीत्या अस्मान् पालय।**
**नित्यवसन्तम् आनीय,**
**प्रत्यहं सुखेन मोदय।**

**चरण २ (भौलि रागः)**
**तन्द्रां नृणां दूरीकृत्य,**
**निद्रायाः उत्थापय।**
**सदा जाग्रदवस्थायां,**
**कथं भवेमेति बोधय।**

**चरण ३ (धर्मवति रागः)**
**अधर्मकार्यं वारय।**
**धर्मं पुनः संस्थापय।**
**सत्कर्मफलं स्वादु स्वादु इति**
**सम्यग् रूपेण पाठय।**

**चरणं ४ (आभोगि रागः)**
**मानवेषु भृशं दृष्टाम्**
**दानवतां उत्पाटय।**
**मानवलोकेऽस्मिन् लुप्तां**
**मैत्रीं भूयः पूरय।।**

**चारणम् ५ (अमृतवर्षिणी रागः)**
**सकालवर्षं पातय।**
**प्रतिकूलान्यपसारय।**
**भूक्षेत्रं साधु कर्षय।**
**भूम्यां हर्षं वर्षय वर्षय।**

**चरणं ६ (आनन्दभैरवी रागः)**
**आनन्दोल्लासातिशयं**
**अद्भुतभाग्यं त्वं आनय।**
**अतुलित - शुभकरामृतमयीं**
**अभयवाणीं त्वं श्रावय**



**- वाणिश्री. आर्**
**चरवाणी - ९६५२०२५६०४**





# श्री वसन्तपञ्चमी वैशिष्ट्यम्

- श्री एन्.रमेशः, चरवाणी - ९०००४८८०८०

वसन्तपञ्चमी माघशुद्धपञ्चम्याम् आचरन्ति। एनं श्री पञ्चमी अथवा मदनपञ्चमी इत्यपि कथ्यते। माघशुद्धपञ्चमी भगवती सरस्वत्याः जन्म दिनोत्सवः। एतद् उत्सवं यावत् भारते विशेषेण आचरन्ति। अस्मिन् दिने मुख्य तया सरस्वत्याः पूजां तथैव रतीमन्मथयोः पूजाम् आचरित्वा दशदानानि करणीयमिति एन माधवः अथवा वसन्तरूपी भगवान् आनन्दयति इति निर्णयामृतकारः कथयति। माघशुद्ध पञ्चम्यां दिने वसन्तर्तोः प्रारम्भ दिनोत्सवः। अस्मिन् दिने यथा चैत्र शुद्ध पञ्चम्यां महाविष्णोः पूजाम् आचरन्ति तथैव माघशुद्ध पग्चम्याम् अपि पूजां कृत्वा वैदिक ब्रह्मणानां कृते अन्नदानादिकं सन्तर्परुपेण करणीयमिति व्रतचूडमण्यामपि उक्तमस्ति।

**वैशिष्ट्यम् -** भगवतीं सरस्वतीं माघ पञ्चम्यां श्री पञ्चमी नाम्ना आरधयन्ति। अथवा ललिता पञ्चमी इत्यपि कथयन्ति। समस्त विद्यानाम् आधारभूता वाग्देवी। सर्वे आबालगोपालाः पुस्तकानि लेखिन्याञ्च सरस्वत्याः पुरतः संस्थात्य आराधयन्ति। यथा भोज महाराज उक्त प्रकारेण

**सङ्गीतमपिसाहित्यं सरस्वत्याः स्तनद्वयम्।**
**एकमापातमधुरं अन्यदालोचनामृतम्।।**

इत्यनेन श्लोकेन समस्त सङ्गीत साहित्य नृत्यादीनां अपि मूलरूपा सा श्रीदेवी एव। एतादृशं मातरं नृत्यकेळीविलादिः स्तुवन्ति। मुख्यतया ज्ञान प्राप्तये सरस्वत्याः आराधनम् अत्यन्त आवश्यकमिति। ब्रह्मवैवर्तपूराणोक्तिः श्री पञ्चम्यां कथं सरस्वत्याः कृत विवरणं श्री देवीभागवतेपि वर्तते।

अस्मिन् दिने आभारते बालानां कृते अक्षराभ्यास महोत्सवः कारयन्ति। सरस्वत्याः आराधनया वाक्शुद्धिः सम्भवति। मेधा, योचना, प्रतिभा, धारणा, प्रज्ञा, स्फुरणा इत्यादीनां मूलहेतुः अम्बा शारदा एव। एनं शिवानुजा इत्यपि कथयन्ति। शरन्नवरात्रिषु मूलानक्षत्र दिने विशेषतः वेदोक्त अथवा पुराणोक्त प्रकारेण सरस्वत्याः आवाहनादिक शोडशोपचार पूजां महती विझुम्भेण कुर्वन्ति।

**चन्द्रका चन्द्रवदना तीव्रा महा भ्रदा बहाबला।**
**भोगदा भारती भामा गोविन्दा गोमती शिवा।।**

एतानि सरस्वत्याः विशिष्ठनामानि। एतानि नामानि प्रतिदिने पञ्चम्याम् अथवा सप्तम्यां, सरस्वत्याः जन्मनक्षत्रे (मूला) पूजां कुर्वन्ति तेषां कृते अम्बायाः करुणाकटाक्षवीक्षणाः पुष्कलतया लभन्ते।





# तिरुमलतिरुपतिदेवस्थानानि

## जनवरि - २०२३

| भानुवासरः | इन्दुवासरः | भौमवासरः | सौम्यवासरः | बृहस्पतिवासरः | भृगुवासरः | मन्दवासरः |
|---|---|---|---|---|---|---|
| 1 | 2 | 3 | 4 | 5 | 6 | 7 |
| 8 | 9 | 10 | 11 | 12 | 13 | 14 |
| 15 | 16 | 17 | 18 | 19 | 20 | 21 |
| 22 | 23 | 24 | 25 | 26 | 27 | 28 |
| 29 | 30 | 31 | | | | |

## फिब्रवरि - २०२३

| भानुवासरः | इन्दुवासरः | भौमवासरः | सौम्यवासरः | बृहस्पतिवासरः | भृगुवासरः | मन्दवासरः |
|---|---|---|---|---|---|---|
| | | | 1 | 2 | 3 | 4 |
| 5 | 6 | 7 | 8 | 9 | 10 | 11 |
| 12 | 13 | 14 | 15 | 16 | 17 | 18 |
| 19 | 20 | 21 | 22 | 23 | 24 | 25 |
| 26 | 27 | 28 | | | | |

## मार्च् - २०२३

| भानुवासरः | इन्दुवासरः | भौमवासरः | सौम्यवासरः | बृहस्पतिवासरः | भृगुवासरः | मन्दवासरः |
|---|---|---|---|---|---|---|
| | | | 1 | 2 | 3 | 4 |
| 5 | 6 | 7 | 8 | 9 | 10 | 11 |
| 12 | 13 | 14 | 15 | 16 | 17 | 18 |
| 19 | 20 | 21 | 22 | 23 | 24 | 25 |
| 26 | 27 | 28 | 29 | 30 | 31 | |

### जनवरि - २०२३

१. आङ्ग्लसंवत्सरारम्भः
०२. वैकुण्ठैकादशी
०७-१३. आण्डाल् नीराट्टोत्सवः
१४. भोगि, भोगि तेरु
१५. मकरसङ्क्रान्तिः
१६. कनुम, श्रीगोदादेवीपरिणयोत्सवः
१८. तिरुमल श्रीस्वामिनः प्रणयकलहमहोत्सवः
२२-३०. देवुनिकडपा श्रीलक्ष्मीवेङ्कटेश्वरस्वामिनः ब्रह्मोत्सवः
२६. गणतन्त्रदिनोत्सवः, वसन्तपञ्चमी
२८. रथसप्तमी, भीष्माष्टमी

### फिब्रवरि - २०२३

०१. भीष्मैकादशी
०५. रामकृष्णतीर्थमुक्कोटि
१८. महाशिवरात्रिः
११-१९. श्रीनिवासमङ्गापुरम् श्रीकल्याणवेङ्कटेश्वरस्वामिनः ब्रह्मोत्सवः
११-२०. पर्यन्तम् तिरुपति कपिलेश्वरस्वामिनः ब्रह्मोत्सवः
२८ तः मार्च् ०८ पर्यन्तम् - तरिगोण्ड श्रीलक्ष्मीनरसिंहस्वामिनः ब्रह्मोत्सवः

### मार्च् - २०२३

०३-०७. तिरुमलक्षेत्रे प्लवोत्सवः
०७. कुमारधारतीर्थमुक्कोटि, श्री लक्ष्मीजयन्ती
१८. अन्नमाचार्यवर्धन्तिः
२०-२८ तिरुपति, श्रीकोदण्डरामस्वामिनः ब्रह्मोत्सवः
२७ तः - ऐप्रिल् ०४ वायलपाडु श्रीपट्टाभिरामस्वामिनः ब्रह्मोत्सवः
२२. श्रीशोभकृत् संवत्सरारम्भः (युगादिः)
३०. श्रीरामनवमी
२४. मत्स्यजयन्ति
३१ तः ऐप्रिल् ०८ पर्यन्तम्. ओण्टिमिट्ट श्री कोदण्डरामस्वामिनः ब्रह्मोत्सवः

# तिरुमलतिरुपतिदेवस्थानानि

## एप्रेल् - २०२३

| भानुवासरः | इन्दुवासरः | भौमवासरः | सौम्यवासरः | बृहस्पतिवासरः | भृगुवासरः | मन्दवासरः |
|---|---|---|---|---|---|---|
| | | | | | | 1 |
| 2 | 3 | 4 | 5 | 6 | 7 | 8 |
| 9 | 10 | 11 | 12 | 13 | 14 | 15 |
| 16 | 17 | 18 | 19 | 20 | 21 | 22 |
| 23 | 24 | 25 | 26 | 27 | 28 | 29 |
| 30 | | | | | | |

## मे - २०२३

| भानुवासरः | इन्दुवासरः | भौमवासरः | सौम्यवासरः | बृहस्पतिवासरः | भृगुवासरः | मन्दवासरः |
|---|---|---|---|---|---|---|
| | 1 | 2 | 3 | 4 | 5 | 6 |
| 7 | 8 | 9 | 10 | 11 | 12 | 13 |
| 14 | 15 | 16 | 17 | 18 | 19 | 20 |
| 21 | 22 | 23 | 24 | 25 | 26 | 27 |
| 28 | 29 | 30 | 31 | | | |

## जून् - २०२३

| भानुवासरः | इन्दुवासरः | भौमवासरः | सौम्यवासरः | बृहस्पतिवासरः | भृगुवासरः | मन्दवासरः |
|---|---|---|---|---|---|---|
| | | | | 1 | 2 | 3 |
| 4 | 5 | 6 | 7 | 8 | 9 | 10 |
| 11 | 12 | 13 | 14 | 15 | 16 | 17 |
| 18 | 19 | 20 | 21 | 22 | 23 | 24 |
| 25 | 26 | 27 | 28 | 29 | 30 | |

### एप्रेल् - २०२३

०३-०५. तिरुमल श्रीस्वामिनः वसन्तोत्सवः
०६ - तुम्बुरुतीर्थमुक्कोटि
१४. तमिळनूतनसंवत्सरारम्भः
२२. श्रीपरशुरामजयन्ति, गङ्गानद्या पुष्कर प्रारम्भः
२३. अक्षयतृतीया,
२५. श्रीरामानुजजयन्ति, श्रीशङ्करजयन्ति
२९ तः मे- ०१ . तिरुमल श्रीपद्मावतीश्रीनिवासपरिणयमहोत्सवः

### मे - २०२३

०१. मे डे
०२-०५.तिरुचानूरु श्रीपद्मावतीदेव्याः वसन्तोत्सवः
०४-१२.नागुलापुरम् श्रीवेदनारायणस्वामिनः ब्रह्मोत्सवः
०४. श्रीनरसिंहजयन्ति, तरिगोण्ड वेङ्कमाम्बाजयन्ति
०५. श्रीकूर्मजयन्ति,
०६. श्रीअन्नमाचार्यजयन्ति
१३-२१. कार्वेटिनगरम् श्रीवेणुगोपालस्वामिनः ब्रह्मोत्सवः
१५. श्रीहनुमज्जयन्ति
१६. तिरुपति गङ्गाजातर
२६ तः जून् ०३ पर्यन्तम् - तिरुपति श्रीगोविन्दराज स्वामिनः ब्रह्मोत्सवः
३० तः जून् ०३. तिरुचानूरु श्रीपद्मावतीदेव्याः प्लवोत्सवः
३१ तः जून् ०८ पर्यन्तम्. हृषीकेष्/नारायणवनम्, अप्पलायगुण्ट श्रीप्रसन्नवेङ्कटेश्वरस्वामिनः ब्रह्मोत्सवः

### जून् - २०२३

०२-०४. तिरुमल श्रीस्वामिनः ज्येष्ठाभिषेकः
०४. एरुवाकपूर्णिम
१७. सावित्री व्रतम्
२०. पुरीजग्गनाथरथयात्रा
२४-२६. श्रीनिवासमङ्गापुरम् श्री कल्याणवेङ्कटेश्वरस्वामिनः साक्षात्कारवैभवम्
२६. तिरुपति श्रीगोविन्दराजस्वामिनः पुष्पयागः
३० तः जूलै ०२ पर्यन्तम्. तिरुपति श्रीगोविन्दराजस्वामिनः ज्येष्ठाभिषेकः
२०-२२. तिरुचानूरु श्रीसुन्दरराजस्वामिनः अवतारोत्सवः

# तिरुमलतिरुपतिदेवस्थानानि

## जूलै - २०२३

| भानुवासरः | इन्दुवासरः | भौमवासरः | सौम्यवासरः | बृहस्पतिवासरः | भृगुवासरः | मन्दवासरः |
|---|---|---|---|---|---|---|
| | | | | | | 1 |
| 2 | 3 | 4 | 5 | 6 | 7 | 8 |
| 9 | 10 | 11 | 12 | 13 | 14 | 15 |
| 16 | 17 | 18 | 19 | 20 | 21 | 22 |
| 23 | 24 | 25 | 26 | 27 | 28 | 29 |
| 30 | 31 | | | | | |

## आगस्ट् - २०२३

| भानुवासरः | इन्दुवासरः | भौमवासरः | सौम्यवासरः | बृहस्पतिवासरः | भृगुवासरः | मन्दवासरः |
|---|---|---|---|---|---|---|
| | | 1 | 2 | 3 | 4 | 5 |
| 6 | 7 | 8 | 9 | 10 | 11 | 12 |
| 13 | 14 | 15 | 16 | 17 | 18 | 19 |
| 20 | 21 | 22 | 23 | 24 | 25 | 26 |
| 27 | 28 | 29 | 30 | 31 | | |

## सेप्टेम्बर् - २०२३

| भानुवासरः | इन्दुवासरः | भौमवासरः | सौम्यवासरः | बृहस्पतिवासरः | भृगुवासरः | मन्दवासरः |
|---|---|---|---|---|---|---|
| | | | | | 1 | 2 |
| 3 | 4 | 5 | 6 | 7 | 8 | 9 |
| 10 | 11 | 12 | 13 | 14 | 15 | 16 |
| 17 | 18 | 19 | 20 | 21 | 22 | 23 |
| 24 | 25 | 26 | 27 | 28 | 29 | 30 |



### जूलै - २०२३

०३. गुरुपूर्णिमा, व्यासजयन्ति
०५. तिरुपति श्रीविखनसमहामुनि शातुमोर्
१७. तिरुमलक्षेत्रे स्वामिनः आणिवर आस्थानम्
०७-०९. श्रीसुन्दरराजस्वामिनः अवतारोत्सवः
३०. तिरुमल नारायणगिरीस्थ चत्रस्थापन, तुलसीमहत्म्यम्
१५. शनित्रयोदशी
२९. श्रीचक्रत्ताळ्वार् वर्षतिरुनक्षत्रम्
१३. आण्डाळ् तिरुवादिपूरम्
१२-१५. तिरुपति श्रीकोदन्डरामस्वामिनः पवित्रोत्सवः

### आगस्ट् - २०२३

०९. आडिकृत्तिक
१५. स्वातन्त्र्यदिवसः
२०. नागचतुर्थी
२१. गरुडपञ्चमी
२५. वरलक्ष्मीव्रतम्, मातृश्री तरिगोण्ड वेङ्गमाम्बावर्धन्तिः
२६ - २९. तिरुमल श्रीस्वामिनः पवित्रोत्सवः
३०. श्रावण पूर्णिमा, श्रीविखनसमहामुनिजयन्ति
३१. श्रीहयग्रीवजयन्ति, गायत्रीजपः

### सेप्टेम्बर् - २०२३

०६. श्रीकृष्णजन्माष्टमी
०७. गोकुलाष्टमी
१४. पोलाल अमावास्य
१७. श्रीबलरामजयन्ती, श्रीवराहजयन्ति
१८ - २६. तिरुमल श्रीवेङ्कटेश्वरस्वामिनः ब्रह्मोत्सवः
१८. विनायकचतुर्थी
१९. ऋषिपञ्चमी
२४-२७. तिरुचानूरु श्रीपद्मावतीमातुः पवित्रोत्सवः
२८. अनन्तपद्मनाभव्रतम्

# तिरुमलतिरुपतिदेवस्थानानि

## अक्टोबर् - २०२३

| भानुवासरः | इन्दुवासरः | भौमवासरः | सौम्यवासरः | बृहस्पतिवासरः | भृगुवासरः | मन्दवासरः |
|---|---|---|---|---|---|---|
| 1 | 2 | 3 | 4 | 5 | 6 | 7 |
| 8 | 9 | 10 | 11 | 12 | 13 | 14 |
| 15 | 16 | 17 | 18 | 19 | 20 | 21 |
| 22 | 23 | 24 | 25 | 26 | 27 | 28 |
| 29 | 30 | 31 | | | | |

## नवम्बर् - २०२३

| भानुवासरः | इन्दुवासरः | भौमवासरः | सौम्यवासरः | बृहस्पतिवासरः | भृगुवासरः | मन्दवासरः |
|---|---|---|---|---|---|---|
| | | | 1 | 2 | 3 | 4 |
| 5 | 6 | 7 | 8 | 9 | 10 | 11 |
| 12 | 13 | 14 | 15 | 16 | 17 | 18 |
| 19 | 20 | 21 | 22 | 23 | 24 | 25 |
| 26 | 27 | 28 | 29 | 30 | | |

## डिसेम्बर् - २०२३

| भानुवासरः | इन्दुवासरः | भौमवासरः | सौम्यवासरः | बृहस्पतिवासरः | भृगुवासरः | मन्दवासरः |
|---|---|---|---|---|---|---|
| | | | | | 1 | 2 |
| 3 | 4 | 5 | 6 | 7 | 8 | 9 |
| 10 | 11 | 12 | 13 | 14 | 15 | 16 |
| 17 | 18 | 19 | 20 | 21 | 22 | 23 |
| 24 | 25 | 26 | 27 | 28 | 29 | 30 |
| 31 | | | | | | |

### अक्टोबर् - २०२३

०२. गान्धीजयन्ति
१४. महालय अमावास्य
१५-२३. तः अक्टोबर् ०५ पर्यन्तं
तिरुचानूरु श्रीपद्मावतीदेव्याः नवरात्र्युत्सवः
१५ - २३.तिरुमल श्रीवेङ्कटेश्वरस्वामिनः नवरात्रि ब्रह्मोत्सवः
१९. तिरुमल श्रीस्वामिनः गरुडसेवा
२०. सरस्वतीपूजा
२२. दुर्गाष्टमी
२३. महानवमी, विजयदशमी
३१. अट्लतद्दे

### नवम्बर् - २०२३

१०-१८ तिरुचानूरु श्रीपद्मावतीदेव्याः ब्रह्मोत्सवः
१२. नरकचतुर्दशि, दीपावली अमावास्या
१३. श्रीकेदारगौरीव्रतम्
१४. तिरुचानूरु श्रीपद्मावतीदेव्याः गजवाहनोत्सवः
बालकदिनोत्सवः
१७. नागचतुर्थी
१८. तिरुचानूरु श्रीपद्मावतीदेव्याः पञ्चमीतीर्थम्
१९. तिरुमलक्षेत्रे स्वामिनः पुष्पयागः
२४. कैशिकद्वादशी
१९. तिरुचानूरु श्रीपद्मावतीदेव्याः पुष्पयागः,

### डिसेम्बर् - २०२३

१०. धन्वन्तरी जयन्ति
१२. तिरुमल श्रीस्वामिनः अध्यनोत्सवः प्रारम्भः
१७. धनुर्मासारम्भः
०४. श्रीचक्रतीर्थमुक्कोटि
०६. तिरुपति श्रीकपिलेश्वरस्वामिनः
कृत्तिकादीपोत्सवः
२६. श्रीदत्तजयन्ती, तिरुमल श्रीस्वामिनः
आलये कृत्तिकादीपोत्सवः
२३. वैकुण्ठैकादशी, गीताजयन्ति
२८. तिरुमल श्रीस्वामिनः प्रणयकलहमहोत्सवः



# सङ्क्रान्तिः

- श्रीमति जि.पारिजाता, चरवाणी - ९४४१३६७७२७

नेदम् अतिशयोक्तिवचनं भवेत् यत् 'पर्वसु अत्यन्तानुभूतिदायकं च पर्व सङ्क्रान्तिः' इति। सप्ताश्वरथारूढस्य दिनपतेः मकरराशिप्रवेशात्मकं कालं वयं मकरसङ्क्रान्तिरिति व्यवहरन्तः, तं दिनं पर्वरूपेण आचरामः। अस्मात् दिनात् प्रकृतौ जायमानो वपरिणामः अस्माकं जीवने हर्षातिरेकं जनयति। अस्मात् पर्वणः पशुसम्पदः क्षेमः लभ्यते इति विश्वसन्ति अन्नदातारः। अतो हेतोः अन्नप्रदातृभ्यः इदं पर्व अत्यन्तं विशिष्टायते।

यद्यपि सूर्यः आवर्षं द्वादशसु राशिसु चङ्क्रमणं करोत्येव, तथापि कर्काट-मकरराश्योः प्रवेशः एव अत्यन्तं वैशिष्ट्येन परिगण्यते। सूर्यस्य कर्काटकराशेः मकरराशिं यावत् स्थितिः दक्षिणायनत्वेन, मकरराशेः कर्काटकराशौ स्थितिः उत्तरायणत्वेन कालपरिगणनायाः कश्चन क्रमः विद्यते। अपि च सूर्यस्य मेषराशौ प्रवेशम् आरभ्य तुलाराशिं यावत् स्थितिः दिनमिव, तुलाराशौ आरभ्य मेशराशौ स्थितिः रात्रिरिव परिगण्यते। यथोक्तं पूर्वमेव सङ्क्रान्तिरित्यस्य तात्पर्यं सूर्यस्य राशिसङ्क्रमणमेव। अर्थात् सूर्यस्य मकरराशेः प्रवेशस्य प्रथमदिनमेव सङ्क्रमणस्य पुण्यकालत्वेन परिगणय्य सङ्क्रान्तित्वेन पर्वरूपेण च आचरणस्य प्रथा विद्यते भारतदेशे। भारतीयखगोलविदः भास्कराचार्यः स्वीये सिद्धान्तशिरोमणौ, वराहमिहिरः स्वीये सूर्यसिद्धान्ते, अपरे च स्वीयग्रन्थेषु द्वादशराशिषु सूर्यसङ्क्रमणस्य विन्यासः, तस्मिन् काले प्रकृतौ जायमानं विपरिणमं, तदानीन्तने काले करणीयानि कृत्यानि उद्दिश्य न्यगदन्।

शिशिरर्तौ अनुभूयमानं शैत्यखेदं विस्मरन्तः वसन्तागमनस्य प्रतीक्षां कुर्वन्तं दिनत्रयमेतस्य पर्वणः आचरणं

अस्मिन् प्रान्ते आबहोः कालात् प्रवर्तते। प्रथमे दिने भोगि इति नाम्ना पर्व आचर्यते। वस्तुस्थित्या दक्षिणायनस्य अवसाने काले सूर्यः भूमेः दक्षिणस्यां दिशि क्रमशः प्रसरति। दक्षिणार्धगोलात् दूरं गच्छतीत्यतः शैत्यस्य प्रभावः महान् भवति। अतो हेतोः अस्मिन् दिने प्रातः काले अग्निं ज्वालयित्वा अग्निना शैत्यतापः निवार्यते। अस्मिन् दिने गृहगताः महिलाः बालिकाश्च मिलित्वा गृहस्य पुरोभागे विशेषैर्वर्णैः रङ्गवल्लीं रचयित्वा सङ्क्रान्तिपुरुषस्य आह्वानं कुर्वन्ति। सायंकाले सुवासिन्यः सम्मिल्त्य पञ्चवर्षवयस्केभ्यः बालेभ्यः दृष्टिदोषनिवारणाय बदरीनारायणस्य आशिषः सन्त्विति कामनया बदरीफलानि इक्षुखण्डाः सम्मिश्य बालानां शिरस्सु अलङ्कुर्वन्ति। केचन कृषकाः क्षेत्रेषु जलेन सिञ्चनं कुर्वन्ति। गोदावरीजनपदेशु पौरुषप्रतिरूपकाः कुक्कुटयुद्धादिक्रीडाः क्रीडन्ति। बालस्तावत् क्रीडासक्ताः इत्यतः एते कर्गदैः पतङ्गान् निर्माय वायौ उड्डाययन्ति।

द्वितीये दिने सूर्यस्य मकरराशौ सङ्क्रमणं पुरस्कृत्य सङ्क्रान्तिरिति पर्वाचरणस्य परम्परा दृश्यते। अस्मिन् दिने उत्तरायणगतस्य सङ्क्रान्तस्य सूर्यस्य छायासु अस्माकम् अशुभानां दाहो भवत्विति प्रार्थयन्ति जनाः। अस्मिन् दिने सङ्क्रान्तिपुरुषं, गृहस्थं देवं, ग्रामदेवतां पितृदेवताश्च आराधयन्ति। मुद्गद्विदलान्नं, मिष्टान्नं, पक्वपदार्थान् तिलमिश्रितलड्डुकान् च निर्माय देवेभ्यः पितृभ्यश्च निवेदयन्ति।

तृतीय दिनं कनुम इति नाम्ना पर्व आचर्यते। कृषकाः स्वीयं जीविकाधारभूतां धरित्रीमातरं समर्चयन्ति। धेनूनां श्रृङ्गेषु वर्णरागं कृत्वा पादेभ्यः मञ्जीराः गले घण्टां च बद्ध्वा पूजयन्ति। इदं धन्यवादसमर्पणपूर्वकम् आचरविशेष एव नान्यत्। गृहस्य द्वारेषु पक्षिभ्यः धान्यगुच्छान् बध्नन्ति। अस्मिन् दिने सायं वेलायां ग्रामीणप्रान्तेषु ग्रामजनाः सर्वे सम्मिलिताः भवन्ति। वृषभशकटक्रीडाः, अविक्रीडाः कुक्कुटक्रीडाः समाचरन्ति। इत्थं मैत्रीभावनया जीवनयापनं कुर्वन्तः जीवने सहकृतवद्भ्यः पशुपक्षिभ्यः कार्तज्ञ्यं निवेदयन्तः, मानवसम्बन्धान् रक्षन्तः इदं पर्व समाचर्यते।







तिरुमलतिरुपतिदेवस्थानानि

**प्रदर्शमान**



सप्तगिरेरुपरि भवतां आदराभिमानम् अनन्य समान्यम् ति.ति.दे.
पाठकानां मध्ये वारधि इव विराजमान सप्तवर्ण आध्यात्मिक सचित्र मास पत्रिका

**सप्तगिरि पत्रिकायाः मूल्ये परिवर्तनम्।**

भवतां गृहं प्रति एव श्रीनिवासस्य आगमनानुभूतिः

सप्तगिरि आध्यात्मिक सचित्र मासपत्रिकायाः कृते शुल्कं दत्वा



श्रीनिवासस्य अक्षरप्रसादं प्रतिमासम् अनुभूयन्तु





# सप्तगिरिः

**आध्यात्मिक सचित्र मास पत्रिका**

(तेलुगु, तमिळं, कन्नडं, हिन्दी, आङ्गलं, संस्कृत भाषाः)

..... **शुल्क विशेषाः** .....

एक पत्रिका प्रतिः रू/- २०
वार्षिक ग्राहकत्वम् रू/- २४०
आजीविक ग्राहकत्वम् रू/- २४००
(१२ वर्ष पर्यन्तम् एव)

शुल्कस्य परिवर्तनं सेप्टम्बर्, २०२२ तः प्रारम्भः। नूतन ग्राहकानां कृते एव एतद् परिवर्तनं भवति।

सङ्केतः
प्रधान सम्पादकः, ति.ति.दे. प्राङ्गणम् मुद्रणा, के.टि.रोड् - तिरुपतिः - ५१७५०१.
दूरभाषा - ०८७७ - २२६४३६३, २२६४५४३, २२६४३५९




# दशमः त्वम् असि

- कविः - विष्णुशर्मा

एकदा दश बालकाः स्नानाय नदीम् अगच्छन्। ते नदीजले चिरं स्नानम् अकुर्वन्। ततः ते तीर्त्वा पारं गताः। तदा तेषां नायकः अपृच्छत् - अपि सर्वं बालकाः नदीम् उत्तीर्णाः?

तदा कश्चित् बालकः अगणयत् एकः, द्वौ, त्रयः, चत्वारः, पञ्च, षट्, सप्त, अष्टौ, नव इति। सः स्वं न अगणयत्। अतः स अवदत् नव एव सन्ति। दशमः न अस्ति। अपरः अपि बालकः पुनः अन्यान् बालकान् अगणयत्। तदा अपि नव एव आसन्। अतः ते निश्चयम् अकुर्वन् यत् दशमः नद्यां मग्नः। ते दुःखिताः तूष्णीम् अतिष्ठन्।

तदा कश्चित् पथिकः तत्र आगच्छत्। सः तान् बालकान् दुःखितान् दृष्ट्वा अपृच्छत् ''बालकाः! युष्माकं दुःखस्य कारणं किम्?'' बालकानां नायकः अकथयत् - ''वयं दश बालकाः स्नातुम् आगताः। इदानीं नव एव स्मः। एकः नद्यां मग्नः'' इति।

पथिकः तान् अगणयत्। तत्र दश बालकाः एव आसन्। सः नायकम् आदिशत् त्वं बालकान् अगणयत्। तदा पथिकः अवदत् - दशमः त्वम् असि इति।

तत् श्रुत्वा प्रहृष्टाः भूत्वा सर्वे गृहम् अगच्छन्।





## नवम्बर्
### लघुप्रश्नोत्तरी
### समाधानानि

१. उपरिचरवसुः
२. व्यासस्य
३. जय
४. ययातिः
५. शर्मिष्ठा
६. देवयानी
७. अभिमन्युः
८. शकुनिः
९. शूरसेनः
१०. पृथा
११. दुश्शला
१२. हस्तिनापुरी
१३. वासुकी
१४. पुरोचनः
१५. अश्वत्थामः

चित्रकथा

# अन्नप्रदाता


तेलुगुमूलम् - डा.कम्पेल्ल रविचन्द्रन्
चित्राणि - तुम्बलि शिवाजी
संस्कृतानुवादः - का. भास्करः
चरवाणी - ८१४३१५०८३३
















मा व्याकुल धर्मराज! सर्वेषां कृते अन्नप्रदाता सः सूर्य भगवान्।

धर्मराजः तेषां पुरोहितं धौम्यं प्रति - ''गुरुवर्य! किम् एतत् विधिवैपरित्यम्? आस्माकं उपरि अभिमानेन कियत् प्रयत्नेन वारयामः चेदपि न श्रुत्वा अस्मान् अनुश्रुत्य आगत महाजनान् आदरित्वा, पोषणस्थितेः वयं न स्मः!

अस्मिन् महारण्ये सर्वेषां कथं आहारस्य ग्रहणं करणीयम्? बुभुक्षाकुलानाम् आहारमपि दातुं न शक्तः मम जीवनं व्यर्थमेव खलु।

भवान् अपि भगवन्तं सूर्यम् आराध्य तस्य अनुग्रहं प्राप्नोतु। अशेष जनान् पोषितुं शक्नोति।

अरुणाय। शरण्याय! करुणारस सिन्धवे।। असमान बलार्थाय। रक्षकाय नमो नमः।।

वत्स! धर्मनन्दन! एतत् अक्षयपात्रम्! एनं सम्पूजयति चेत् यदिष्टं प्राप्नोति।

धन्योस्मि भगवन्! धन्योस्मि।

स्वस्ति

अस्य चित्रपटस्य रञ्जनं कुर्मः वा?

प्रदत्तं चित्रपटम् अधोनिर्दिष्टप्रदेशे स्थापयामो वा?

बा
ल
वि
नो
दि
नी



## रसप्रश्नाः

१. देवक्याः पिता कः?

२.देवक्याः पालित पिता कः?

३. उग्रसेनस्य पुत्रः कः?

४.श्रीकृष्णस्य मातुलः कः?

५.उग्रसेनस्य राजधानी का?

६.भागवतस्य कर्ता कः?

(समाधानानि - १. देवकः २. उग्रसेन महाराजः ३. कंसः ४. कंसः ५. मथुरा ६. वेदव्यासः)








१. वामहस्ते कङ्कणानि, २. दक्षिण पादे नूपुरः, ३.कर्णे आभरणम्, ४. शिरसि पुष्पाणि ५. कूर्परे आभरणम्, ६. वेण्यां गण्टा, ७. शिरसि चूडामणिः







# तिरुमलतिरुपतिदेवस्थानानि

ऐदंप्राथम्येन सप्तगिरिमासपत्रिकायां लघुप्रश्नोत्तरी इति स्पर्धाकार्यक्रमः आयोजितः यत्र एतन्मासीयपत्रिकायां प्रकटितविषयाधारिताः प्रश्नाः भवेयुः। अतः हे बालबालिकाः! प्रतिमासं इमां पत्रिकां पठित्वा उत्तरदानप्रक्रियायां सक्रियं भागं वहन्ति खलु!

## लघुप्रश्नोत्तरी

१. पुराणेषु श्रेष्ठतमं किम् ?
२. कस्य प्रचोदनेन वेदव्यासः भागवतं रचयामास ?
३. परीक्षित् कृते भागवतं केन प्रबोधितम्?
४. शुकमहर्षिः भागवतं कति दिनानि श्रावितानि?
५. भागवते कतिश्लोकाः सन्ति?
६. भागवत पुराण विभागान् किमिति कथयन्ति?
७. भागवते कति स्कन्दाः सन्ति?
८. शुकेन परीक्षितं भागवतं कुत्र श्रावयामास?
९. परिक्षित् महाराजस्य पिता कः?
१०. परिक्षित् महाराजस्य माता कः?
११. गर्भस्थं परीक्षितं कः रक्षितवान्?
१२. भागवत पुराणे श्रीकृष्णचरितं कुत्र वर्णितम् ?
१३. श्रीकृष्णस्य पितरौ कौ?
१४. श्रीकृष्णस्य पालितपितरौ कौ?
१५. वसुदेवः कस्मिन् वंशे सञ्जातः?

| समाधानानि |
|---|
| १. |
| २. |
| ३. |
| ४. |
| ५. |
| ६. |
| ७. |
| ८. |
| ९. |
| १०. |
| ११. |
| १२. |
| १३. |
| १४. |
| १५. |

## नियमावालिः

१. केवलं १० तः १५ वर्षीयाः बालाः हैन्दवाः अत्र भागं ग्रहीतुमर्हन्ति।
२. बालाः पत्रिकापुटे प्रदत्तस्थले समानभाषायाम् एव उत्तरं विलिख्य तत्पत्रं **The Chief Editor Office, Sapthagiri, T.T.D. Press Compound, K.T.Road, Tirupati 517507,** प्रति २५ दिनाङ्कात् पूर्वं प्रेषयेयुः। प्रतिकृतीः **(Xerox)** नैव स्वीक्रियन्ते।
३. बालानां पितरौ मासपत्रिकाग्रहीतारः **(Subsribers)** भवेयुः। तत्र नाम, सङ्केतः, दूरवाणीसङ्ख्या च उत्तरपत्रिकायां देया एव।
४. समाधानेषु त्रुटयः, समीकरणानि च न भवेयुः।
५. सर्वेषां प्रश्नानां समीचीनसमाधानं दत्तानां त्रयाणां बालानां चयनं **DIP** द्वारा क्रियते।
६. विजेतृणां नामानि अग्रिममासीय सप्तगिरि पत्रिकायां प्रचुरितानि भवन्ति।
७. **Chief Editor** कार्यालयीयकार्यकर्तृपुत्रपत्रिकानां च अत्र अवकाशो नास्ति।
८. अस्य कार्यक्रमस्य समाचारः दूरवाणीद्वारा नैव दीयते।

**Subscription Number** :
**Name** :
**Mother** :
**Father** :
**Address** :
**Phone Number** :

Printed by Sri P. Ramaraju, M.A., and Published by Dr. K. Radha Ramana, M.A., M.Phil., Phd., on behalf of Tirumala Tirupati Devasthanams and Printed and Publised at Tirumala Tirupati Devasthanams Press, K.T. Road,Tirupati 517 507.
Editor : Dr.V.G. Chokkalingam, M.A., Ph.D.

भारतराष्ट्रपती मान्य श्रीमति द्रौपदी मुर्मु महाभागाः तिरुमल श्री वेङ्कटेश्वरस्वामिनं तथैव तिरुचानूरु श्री पद्मावती देवीं ०५.१२.२०२२ दिनाङ्के सन्दर्शितवन्तः। तां ति.ति.दे. अध्यक्षः श्री वै.वि.सुब्बारेड्डि, ति.ति.दे. कार्यनिर्वहणाधिकारिणः श्री ए.वि.धर्मरेड्डि, ऐ.डि.इ.एस्. महोदयाश्च इष्टिकपाल गौरवरूपेण स्वागतं व्याहृत्य श्री स्वामिनः तीर्थ प्रसादादिकं दत्तवन्तः।













ति.ति.दे. परिपालना भवने (तिरुपति) १८.११.२०२२ दिनाङ्के ति.ति.दे. पक्षतः आयोजित कार्तिक दीपोत्सवस्य दृश्याः। अस्मिन् कार्यक्रमे ति.ति.दे. कार्यनिर्वणाधिकारिणः श्री ऐ.वि.धर्मारेड्डि, ऐ.डि.ई.एस्., ति.ति.दे. संयुक्त कार्यनिर्वणाधिकारिणौ श्री ऐ.वीरब्रह्मम्,ऐ.ए.एस्. तथैव श्रीमति सदा भार्गवी, ऐ.ए.स्, अन्ये प्रमुखाः भागं स्वीकृतवन्तः। अस्मिन् उत्सवे अत्यधिक सङ्ख्याकाः महिळाः तथैव दम्पत्यः भागं गृहीतवन्तः।



SAPTHAGIRI (SANSKRIT) SPIRITUAL ILLUSTRATED MONTHLY PUBLISHED BY TIRUMALA TIRUPATI DEVASTHANAMS
PRINTING ON 25-12-2022 & posting at Tirupati RMS Regd.with the Registrar of Newspapers for India under RNI No.21138/1970 Postal Regd. No. TRP/154/2021-2023"
LICENCED TO POST WITHOUT PREPAYMENT No.PMGK/RNP/WPP-04(4)/2021-2023"
Posting on 5th of every month.

या कुन्देन्दु तुषार हार धवळा या शुभ्रवस्त्रान्विता
या वीणावरदण्डमण्डितकरा या श्वेत पद्मासना।
या ब्रह्माच्युत शङ्कर प्रभृतिभिर्देवैस्सदा पूजिता
सा मां पातु सरस्वती भगवती निश्शेषजाड्यापहा।।

# वसन्त पञ्चमि

(२६-०१-२०२३)

SIVAPRASAD